श्रीगणेशायनमः श्रीसीतारामचंद्राभ्यांनमः १ मृधेयुद्धे २ ३ कथंकेनप्रकारेण ४ श्रद्दधत्याः एतच्छ्रवणेश्रद्धावत्याः कथामृत
मास्वाद्य मेमम तदास्वादनविषयातृष्णात्यंतंवर्द्धते ५ रामेराज्यमुपस्थितेराज्यंप्राप्तवतीत्यर्थः अभिवंदितुंनमितुंस्तोतुंच ६ता

जयतिरघुवंशतिलकःकौसल्याहृदयनंदनोरामः दशवदननिधनकारीदाशरथिःपुंडरीकाक्षः १
पार्वत्युवाच अथरामःकिमकरोत्कौसल्यानंदवर्द्धनः हत्वामृधेरावणादीन्राक्षसान्भीमविक्रमान् २
अभिषिक्तस्त्वयोध्यायांसीतयासहराघवः मायामानुषतांप्राप्यकतिवर्षाणिभूतले ३ स्थितवान्ली
लयादेवःपरमात्मासनातनः अत्यजन्मानुषंलोकंकथंमेनरघूद्वहः ४ एतदाख्याहिभगवन्श्रद्दधत्या
ममप्रभो कथापीयूषमास्वाद्यतृष्णामेतीववर्द्धते रामचंद्रस्यभगवन्ब्रूहिविस्तरशः कथाम् ५
श्रीमहादेवउवाच राक्षसानांवधंकृत्वाराज्येरामउपस्थिते आययुर्मुनयःसर्वेश्रीराममभिवंदितु
म् ६ विश्वामित्रोसितःकण्वोदुर्वासाभृगुरंगिराः कश्यपोवामदेवोऽत्रिस्तथासप्तर्षयोऽमलाः ७ अ
गस्त्यःसहशिष्यैश्चमुनिभिःसहितोऽभ्यगात् द्वारमासाद्यरामस्यद्वारपालमथाब्रवीत् ८ ब्रूहिरा
मायमुनयःसमागत्यबहिःस्थिताः अगस्त्यप्रमुखाःसर्वेआशीर्भिरभिनंदितुम् ९ प्रतीहारस्ततो-
राममगस्त्यवचनाद्द्रुतम् नमस्कृत्वाऽब्रवीद्वाक्यंविनयावनतःप्रभुम् १०

नेवकृषीनाह विश्वामित्रइति ७ मुनि
भिःशिष्यैश्चसहितइत्यर्थः ८ अगस्त्यप्रमुखामुनयआशीर्भिरभिनंदितुंसमागत्यबहिःस्थिताःसंतीतिरामायब्रूहीत्यन्वयः ९
१०

सगुणं ध्येयं रूपमाह हृत्पद्मेति तत्कर्णिकास्थे स्वर्णपीठे स्थितमित्यन्वयः श्लक्ष्णं स्निग्धं ५८ वीरासनं वीरासनस्थं विद्युत्पुंजनिभां
बरं पीतांबरमित्यर्थः ५९ भातं शोभायमानम् धनुर्द्धृक्करेण एकं स्वस्यैकं रामस्येति द्वयम् ६० सर्वहृदिस्थितमित्यनेन एवंभू
तः सर्वप्रेरकत्वेन ध्येयः एवं हि सर्वस्य स्वतंत्रत्वाभावनिश्चये द्वेषादिहानिर्भवतीत्यर्थः ६१ भक्तेः कथ्यमानमिति शेषः कृतपू

हृत्पद्मकर्णिके स्वर्णपीठे मणिगणान्विते मृदुश्लक्ष्णतरे तत्र जानक्या सह संस्थितम् ५८ वीरासनं विशा-
लाक्षं विद्युत्पुंजनिभांबरम् किरीटहारकेयूरकौस्तुभादिभिरन्वितम् ५९ नूपुरैः कटकैर्भातं तथैव वन
मालया लक्ष्मणेन धनुर्द्धृक्करेणापरिसेवितम् ६० एवं ध्यात्वा सदात्मानं रामं सर्वहृदिस्थितम् भक्त्या प
रमया युक्तो मुच्यते नात्र संशयः ६१ शृणु वैचारितं तस्य भक्तेर्नित्यमनन्यधीः एवं चेत्कृतपूर्वाणि पापानि च
महांत्यपि क्षणादेव विनश्यन्ति यथाग्नेस्तूलराशयः ६२ भज स्वरामं परिपूर्णमेकं विहाय वैरं निजभक्ति
युक्तः हृदा सदा भावितभावरूपमनामरूपं पुरुषं पुराणम् ६३ इति श्रीमदध्यात्मरामायणे उमामहेश्व
रसंवादे युद्धकांडे षष्ठः सर्गः ६ श्रीमहादेव उवाच कालनेमिवचः श्रुत्वा रावणोऽमृतसन्निभम्
जज्वाल क्रोधताम्राक्षः सर्पिरद्भिरिवाग्निमत् १

र्वाणि पूर्वं कृतानि यथाग्नेः स्पर्शात्तूलराशयो-
नश्यंतिन तद्वत् ६२ वैरं वैरभावम् निजभक्तियुक्तः अनन्यभक्तियुक्तः हृदा हृदयेन सदा भावितं भावस्य सत्तारूपस्य ब्रह्मणो रूपं स्व
रूपं बुद्धमुक्तस्वभावं येन तम् वस्तुतः स एव नामरूपेत्यादिना ६३ इति श्रीमत्सकलराज० युद्धकांडे षष्ठः सर्गः ६ ६ ६
अग्निमत् अग्निना सर्पिर्घृतं जलसंयोगाद्यथा महाज्वालावद्भवति तथा जज्वालेत्यर्थः १ ६ ६ ६

कृतांजलिः प्रतीहार इति शेषः प्राप्तः स्वाश्रमादागतः बहिर्द्वारि उपस्थितोऽस्तीति शेषः ११ पूजिताः प्रतीहारेण मार्गप्रदर्शनादि
ना पूजिताः कृतादरा इति यावत् १२ गां मधुपकार्थं वृषभं च महोक्षं वा महाजं वा श्रोत्रियाय प्रकल्पयेदिति स्मृतेः १३ यथार्हतः अर्हयो
ग्यता तदनतिक्रमादित्यर्थः भगवतः सकाशात् पूजालाभेन प्रहर्षः १४ अब्रुवन् अपृच्छन् तमेवाभिनयति कुशलमित्यादि १५ सरा

कृतांजलिरुवाचेदमगस्त्यो मुनिभिः सह देवत्वद्दर्शनार्थाय प्राप्तो बहिरुपस्थितः ११ तमुवाच द्वारपालं प्र
वेशय यथासुखम् पूजितार्विविशुर्वेश्म नानारत्नविभूषितम् १२ दृष्ट्वा रामो मुनीन् शीघ्रं प्रत्युत्थाय कृ
तांजलिः पाद्यार्घ्यादिभिरापूज्य गां निवेद्य यथाविधि १३ नत्वा तेभ्यो ददौ दिव्यान्यासनानि यथार्हतः
उपविष्टाः प्रहृष्टाश्च मुनयो रामपूजिताः १४ संपृष्टकुशलाः सर्वे रामं कुशलमब्रुवन् कुशलं ते महाबा
हो सर्वत्र रघुनंदन १५ दिष्ट्येदानीं प्रपश्यामो हतशत्रुमरिंदम नहि भारः स ते राम रावणो राक्षसेश्वरः
१६ स धनुस्त्वं हि लोकांस्त्रीन्विजेतुं शक्त एव हि दिष्ट्या त्वया हताः सर्वे राक्षसा रावणादयः १७ सत्य
मेतन्महाबाहो रावणस्य निबर्हणम् असत्यमेतत्संग्रामे रावणेर्यन्निषूदनम् १८ अंतकप्रतिमाः सर्वे
कुंभकर्णादयो मृधे अंतकप्रतिमैर्बाणैर्हतास्ते रघुसत्तम १९ दत्ताश्चैव यथास्माकं पुरा ह्यभयदक्षिणा
हत्वा रक्षोगणान् संख्ये कृतकृत्योऽद्य जीवसि २०

वणस्तेन भारः क्लेशवध्यो न किंतु सुकरवध इत्यर्थः १६ सुकरत्वमेव दर्श
यति स धनुरिति इंद्रजितं स्मृत्वाऽऽहुर्दिष्ट्येति १७ तदेव स्पष्टयति सत्यमिति रावणेर्मेघनादस्य १८ १९ याद्दक्षिणा पुरा दत्ता दा
तुं प्रतिज्ञाता सा रक्षोगणान्हत्वा पूर्णा कृता अतः कृतकृत्यः सन् जीवसि त्वमेव जीवसि तज्जीवनमेव श्लाघ्यमित्यर्थः २० ७

२१ २२ २३ यथावृत्तंजातंतथाशृणु २४ २५ मुनिपुंगवः मुनिश्रेष्ठः सन् अवसत्तपस्तेपेच २६ २७ विघ्नंचक्रुः गाननृत्यादिभि

श्रुत्वातुभाषितंतेषांमुनीनांभावितात्मनाम् विस्मयंपरमंगत्वारामःप्रांजलिरब्रवीत् २१ रावणादीनति
क्रम्यकुंभकर्णादिराक्षसान् त्रिलोकजयिनोहित्वाकिंप्रशंसथरावणिम् २२ ततस्तुवचनंश्रुत्वाराघवस्य
महात्मनः कुंभयोनिर्महातेजारामंप्रीत्यावचोब्रवीत् २३ शृणुरामयथावृत्तंरावणेरावणस्यच जन्म-
कर्मवरादानंसंक्षेपाद्ददतोमम २४ पुराकृतयुगेरामपुलस्त्योब्रह्मणःसुतः तपस्तप्तुंगतोविद्वान्मे
रोःपार्श्वमहामतिः २५ तृणबिंदोराश्रमेसौम्यवसन्मुनिपुंगवः तपस्तेपेमहातेजाःस्वाध्यायनिरतःसदा
२६ तत्राश्रमेमहारम्येदेवगंधर्वकन्यकाः गायंत्योननृतुस्तत्रहसंत्योवादयंतिच २७ पुलस्त्यस्यतपोवि
घ्नंचक्रुःसर्वाअनिंदिताः ततःक्रुद्धोमहातेजाव्याजहारवचोमहत् २८ यामेदृष्टिपथंगच्छेत्सागर्भंधारयि
ष्यति ताःसर्वाःशापसंविग्नाननतंदेशंप्रचक्रमुः २९ तृणबिंदोस्तुराजर्षेःकन्यातन्नाशृणोद्वचः विचचा
रमुनेरग्रेनिर्भयातंप्रपश्यती ३० बभूवपांडुरतनुर्व्यंजितांतशरीरजा दृष्ट्वासादेहवैवर्ण्यंभीतापितरमन्व
गात् ३१ तृणबिंदुश्चतांदृष्ट्वाराजर्षिरमितद्युतिः ध्यात्वामुनिकृतंसर्वमवैद्विज्ञानचक्षुषा ३२
तांकन्यांमुनिवर्यायपुलस्त्यायददौपिता तांप्रगृह्याब्रवीत्कन्यांबाढमित्येवसद्विजः ३३ शुश्रूषणप
रांदृष्ट्वामुनिःप्रीतोब्रवीद्वचः दास्यामिपुत्रमेकंतेउभयोर्वंशवर्द्धनम् ३४

रितिशेषः २८ २९ प्रपश्यतीत्यत्रनुमभावआर्षः ३० व्यंजितःप्रकटीकृतोंऽतःमध्येशरीरजोगर्भोयस्याःसा ३१ अवै
त् अजानात् ३२ ३३ उभयोर्मातापित्रोः ३४ ८ ८ ८ ८

परैर्दत्तं किंचिद्गृहीत्वा धनलोभात् रामकिंकरत्वं मासइवभाषसे २ यदिमेवचोनरोचते तदागत्वा नत्वदाज्ञप्तमेवकरोमि ३ रावणेनैवस्वयमेवनोदितइत्यर्थः ४ खलः अंतर्दुष्टः अतएवमुनिवेषधरोनतुमुनिः ५ गच्छतोवायुसूनोर्मार्गमासाद्यतदीयमार्गमध्येतपोवनमकल्पयदित्यर्थः ६ ७ मार्गेमेविप्रांशित : स्वरूः मार्गांतरे आगतमितियावत् उतानाश्रमे आश्रमत्वम्त्रमः अथ

निहन्मित्वांदुरात्मानंमच्छासनपराङ्मुखम् परैःकिंचिद्गृहीत्वात्वंभाषसेरामकिंकरः २ कालनेमिरुवाचेदं रावणंदेवकिंकुधा नरोचतेमेवचनंयदिगत्वाकरोमितत् ३ इत्युक्त्वाप्रययौशीघ्रंकालनेमिर्महासुरः नोदितोरावणेनैवहनूमद्विघ्नकारणात् ४ सगत्वाहिमवत्पार्श्वेतपोवनमकल्पयत् तत्रशिष्यैःपरिवृतोमुनिवेषधरःखलः ५ गच्छतोमार्गमासाद्यवायुसूनोर्महात्मनः ततोगत्वाददर्शाथहनूमानाश्रमंशुभम् ६ चिंतयामासमनसाश्रीमान्पवननंदनः पुरानदृष्टमेतन्मेमुनिमंडलमुत्तमम् ७ मार्गोविप्रांशितोवामेभ्रमोवाचित्तसंभवः यद्वाविश्याश्रमपदंदृष्ट्वामुनिमशेषतः ८ पीत्वाजलंततोयामिद्रोणाचलमनुत्तमम् इत्युक्त्वाप्रविवेशाथसर्वतोयोजनायतम् ९ आश्रमंकदलीशालखर्जूरपनसादिभिः समावृत्तंपक्वफलैर्नम्रशाखैश्चपादपैः १० वैरभावविनिर्मुक्तंशुद्धंनिर्मललक्षणम् तस्मिन्महाश्रमेरम्येकालनेमिःसराक्षसः ११

वाकिमनेनविचारेणेत्याह यद्वेति मुनिमितिजातावेकवचनंअशेषतोमुनीन्दृष्ट्वेत्यर्थः ८ ९ उक्तगुणैःपादपैश्चसमावृतमाश्रमंप्रविवेशेत्यन्वयः १० वैरभावविनिर्मुक्तंयत्राश्रमेऽहिनकुलादयोपिपरस्परंवैरभावंत्यक्त्वानिष्ठंतितिनमित्याश्रमविशेषणम् ११

अ॰रा॰टी॰
२

यंप्रासूतसविश्रवाइतिव्याख्यातइत्यर्थः ३५ शीलमुत्तमस्वभावः ३६ वैश्रवणःकुबेरः ३७ तत्तपसातस्यतपसामनोऽभिलषितं
धनेशत्वरूपंददौ ३८ ३९ प्राहपितरमिति कामवरंदत्वेत्यस्यस्थानंनदत्तवानित्यनेनान्वयः ४० हिंसापीडायत्रकस्यापि

उ॰कां॰
७

ततःप्रासूतसापुत्रंपुलस्त्याल्लोकविश्रुतम् विश्रवाइतिविख्यातःपौलस्त्योब्रह्मवित्मुनिः ३५ तस्य-
शीलादिकंदृष्ट्वाभरद्वाजोमहामुनिः भार्यार्थंस्वांदुहितरंददौविश्रवसेमुदा ३६ तस्यांतुपुत्रःसंज
ज्ञेपौलस्त्याल्लोकसंमतः पितृतुल्योवैश्रवणोब्रह्मणाचानुमोदितः ३७ ददौतत्तपसातुष्टोब्रह्मातस्मै
वरंशुभम् मनोऽभिलषितंतस्यधनेशत्वमखंडितम् ३८ ततोलब्धवरःसोऽपिपितरंद्रष्टुमागतःपुष्पके
णधनाध्यक्षोब्रह्मदत्तेनभास्वता ३९ नमस्कृत्याथपितरंनिवेद्यतपसःफलम् प्राहमेभगवान्ब्रह्मादत्वाव
रमनिंदितम् ४० निवासायनमेस्थानंदत्तवान्परमेश्वरः ब्रूहिमेनियतंस्थानंहिंसायत्रनकस्यचित् ४१ विश्र
वाअपितंप्राहलंकानामपुरीशुभा राक्षसानांनिवासायनिर्मिताविश्वकर्मणा ४२ त्यक्त्वाविष्णुभयाद्दैत्यावि
विशुस्तेरसातलम् सापुरीदुःप्रधर्षाऽन्यैर्मध्येसागरमास्थिता ४३ तत्रवासायगच्छत्वंनान्यैःस्वाधिष्ठितापु
रा पित्रादिष्टस्त्वसौगत्वातांपुरींधनदोविशत् ४४ सतत्रसुचिरंकालमुवासपितृसंमतः कस्यचित्त्वथका
लस्यसुमालीनामराक्षसः ४५ रसातलान्मर्त्यलोकंचचारपिशिताशनः गृहीत्वातनयांकन्यांसाक्षाद्देवीमिवश्रि
यम् ४६

२

स्वाम्यंनास्तितादृशंवदेत्यर्थः ४१ ४२ अन्यैःरिपुभिःदुःप्रधर्षा ४३ पुरादैत्यानांरसातलप्रवेशोऽनन्तरमितःप्रागित्यर्थः ४४ ४५ ४६

४७ ४८ गृह्यसेप्रार्थ्यसे क्वचित्तथैवपाठः ४९ ईदृशाइत्यस्यैवविवरणंधनदेनसमाइति ५० साआश्रममितिच्छेदः लज्जावशात् भूले
खनादि ५१ काकिंजातीया कन्यासिउतविवाहितासीतिप्रश्नः ५२ ५३ ५४ त्वत्तोप्येवंविधौसुतावित्यत्र काकुः यस्तेपश्चिमः

अपश्यद्धनदं देवंचरंतंपुष्पकेणसः हितायचिंतयामासुराक्षसानांमहामनाः ४७ उवाचतनयांतत्रकैके
सींनाममनामतः वत्सेविवाहकालस्तेयौवनंचातिवर्तते ४८ प्रत्याख्यानाच्चभीतैस्त्वंनवरैर्गृह्यसेशु
भे सात्वंवरयभद्रंतेमुनिंब्रह्मकुलोद्भवम् ४९ स्वयमेवततः पुत्राभविष्यंतिमहाबलाः ईदृशाःसर्वशो
भाढ्याधनदेनसमाःशुभे ५० तथेतिसाश्रमंगत्वामुनेरग्रेव्यवस्थिता लिखंतीभुवमग्रेणपादेनाधोमुखी
स्थिता ५१ तामपृच्छन्मुनिःकात्वंकन्यासिवरवर्णिनि साब्रवीत्प्रांजलिर्ब्रह्मन् ध्यानेनज्ञातुमर्हसि ५२ ततो
ध्यात्वामुनिःसर्वंज्ञात्वातांप्रत्यभाषत ज्ञातंतवाभिलषितंमत्तःपुत्रानभीप्स्यसि ५३ दारुणायातुवेला
यामागताऽसिसुमध्यमे अतस्तेदारुणौपुत्रौराक्षसौसंभविष्यतः ५४ साब्रवीन्मुनिशार्दूलत्वत्तोऽप्ये
वंविधौसुतौ तामाहपश्चिमोयस्तेभविष्यतिमहामतिः ५५ महाभागवतःश्रीमान् रामभक्त्येकतत्प
रः इत्युक्तासातथाकालेसुषुवेदशकंधरम् ५६ रावणंविंशतिभुजंदशशीर्षंमहाभुजम् तद्रक्षो
जातमात्रेणचचालचवसुंधरा ५७ बभूवुर्नाशहेतूनिनिमित्तान्यखिलान्यपि कुंभकर्णस्ततोजातोम
हापर्वतसन्निभः ५८

पुत्रोभविष्यति समहामतिर्भविष्यतीत्यर्थः ५५ तदेवाह महाभागवतइति रामभक्त्येत्यस्य युक्तइतिशे
षः एकस्मिन् तस्मिन्नेवनत्परः सर्वदादत्तचित्तः ५६ तद्रक्षोजातमात्रेणतस्यरक्षसोजन्ममात्रेणेत्यर्थः ५७ नाशहेतूनिरक्षोवंशस्यलोकानांचेति
शेषः ५८

इंद्रयोगः कपटम् १२ १३ १४ ममकमंडलुगतमित्यन्वयः १५ तदनंतरं जलपानानंतरंगमनेत्वरामास्तु १६ १७ जलंजलाशयम् १८ मायाविकल्पितंस्वमायया कल्पितंबटुंशिष्यम् १९ अथहनूमंतंप्रत्याहनिमील्यचेति २० तथेतिउक्तेतिशेषः अपि-

इंद्रयोगंसमास्थायचकारशिवपूजनम् हनूमानभिवाद्याहगौरवेणमहास्फुरम् १२ भगवन्रामदूतोहंहनूमान्नामनामनः रामकार्येणमहताक्षीराब्धिंगंतुमुद्यतः १३ तृषामांबाधतेब्रह्मन्नुदकंकुत्रविद्यते यथेच्छंपातुमिच्छामिकथ्यतांमेमुनीश्वर १४ तच्छ्रुत्वामारुतेर्वाक्यंकालनेमिस्तमब्रवीत् कमंडलुगतंतोयंममत्वंपातुमर्हसि १५ भुंक्ष्वचेमानिपक्वानिफलानितदनंतरम् निवसस्वरस्फुरखेनात्रनिद्रांमेहित्वरास्तुमा १६ भूतंभव्यंभविष्यंचजानामितपसास्वयम् उत्थितोलक्ष्मणःसर्वेवानराराम वीक्षिताः १७ तच्छ्रुत्वाहनुमानाहकमंडलुजलेनमे नशाम्यत्यधिकातृष्णाततोदर्शयमेजलम् १८ तथेत्याज्ञापयामासबटुंमायाविकल्पितम् बटोदर्शयविस्तीर्णंवायुसूनोर्जलाशयम् १९ निमील्यचाक्षिणीतोयंपीत्वागच्छममांतिकम् उपदेक्ष्यामितेमंत्रंयेनद्रक्ष्यसिचौषधीः २० तथेतिदर्शितंशीघ्रंबटुनासलिलाशयम् प्रविश्यहनुमान्तोयमपिबन्मीलितेक्षणः २१ ततश्चागत्यमकरीमहामायामहाकपिम् अग्रःसत्तंमहावेगात्मारुतिंघोररूपिणी २२ ततोददर्शहनुमान्ग्रसंतींमकरींरुषा दारयामासहस्ताभ्यांवदनंसाममारह २३ ततोंतरिक्षेददृशेदिव्यरूपधरांगना धान्यमालीतिविख्याताहनूमंतमथाब्रवीत् २४

बटुरितिच्छेदः २१ महामायाबहुमायावतीमकरीमकराकारा २२ २३ इतिविख्याताअप्सराइतिशेषः २४ ७ ७

५९ स्वाध्यायी वेदाध्ययनवान् नित्यंकर्माग्निहोत्रादि संतुष्टचेतसः अतिशांतानित्यर्थः भक्षयन्नित्यनेनान्वयः ६० आमयोरोगः ६१ सकलांतरस्थंजानासि सर्वांतर्यामित्वात् तदेवस्फुटयति सर्वहृदिस्थितोहीत्यंतेनहिर्यतइत्यर्थोविज्ञानदृक् विज्ञानेनस्वरूपेणदृक् सर्वद्रष्टा अनेनचित्तादिकरणांतरनैरपेक्ष्यमुक्तम् अतएवसाक्षी साक्षाद्द्रष्टा नन्वहंमनुष्यःकुतोममेदृश्यत्वंतत्राह त्वंलीलेति च-स्तुतोनमनुष्यस्त्वमितिभावः स्वमहिमन् स्वमात्रज्ञेयमहिमन् अन्यैस्त्वन्महिमादुर्ज्ञेयइत्यर्थः मायागुणैः रजआदिभिर्नाज्यसे

ततःशूर्पणखानामजातारावणसोदरी ततोबिभीषणोजातःशांतात्मासौम्यदर्शनः ५९ स्वाध्यायीनियताहारोनित्यकर्मपरायणः कुंभकर्णस्तुदुष्टात्माद्विजान्संतुष्टचेतसः ६० भक्षयन्नृषिसंघांश्चविचचारातिदारुणः रावणोऽपिमहासत्वोलोकानांभयदायकः ववृधेलोकनाशायव्याधामयोदेहिनामिव ६१ रामत्वंसकलांतरस्थमभितोजानासिविज्ञानदृक्साक्षीसर्वहृदिस्थितोहिपरमोनित्योदितोनिर्मलः त्वंलीलामनुजाकृतिःस्वमहिमन्मायागुणैर्नाज्यसेलीलार्थंप्रतिचोदितोऽद्यभवतावक्ष्यामिरक्षोद्भवम् ६२ जानामिकेवलमनंतमचिंत्यशक्तिंचिन्मात्रमक्षरमजंविदितात्मतत्वम् त्वांराममूढनिजरूपमनुप्रवृत्तोमूढोऽप्यहंभवदनुग्रहतश्चरामि ६३

नस्पृश्यसे एवंसर्वज्ञस्यतवाग्रे कथनंयद्यप्यनुचितं तथाऽपिभवतालीलार्थंप्रति-चोदितः पृष्टोरक्षोद्भवंवक्ष्यामिरक्षोद्भवमित्यत्रसंधिरार्षः ६२ ननुत्वंमामेवंकथंज्ञातवानसीत्यत्राह जानामीति मूढोऽप्यहंभवदनुग्रहतएवंविशेषणंत्वांजानामि अनंतंदेशकालापरिच्छेद्यमक्षरंजराभ्यांनाशोत्पत्तिराहित्यमुक्तम् सांसारिकान्प्रतिगूढंगुप्तंकृतंनिजरूपंयेनतम् अथापिसमनुप्रवृत्तः त्वत्प्रवृत्तिमार्गमनुप्रवृत्तोऽङ्गीकृतप्रवृत्तिमार्गइहलोकेचरामि ६३

इनवंशे सूर्यवंशे पवित्राकीर्तिर्यस्यसः एतत्सकलमप्युदाहृतमंतर्यामित्वादिदं दृश्यमानं जगच्चमायाश्रितमेव तत्रहेतुरनन्यक
त्वात् नविद्यतेऽन्ययस्यसोऽनन्यकस्तस्यभावस्तत्त्वंममताहृशत्वात् धर्मरहितत्वात् इतराधारत्वादेरप्यसंभवात् सर्वधर्मजालम
पिगृह्यमाणंमायाश्रितमेवजानीहिइतिशेषः स्वावतारस्यमुख्यप्रयोजनमाह भक्त्येतिनमितिकीर्तनद्वारापापहरणार्थमेवावतार
इतिभावः ६४ इतिश्रीमत्सकल० अध्यात्मरामायणसेतौउत्तरकांडेप्रथमः सर्गः १ १ अथेति तत्रविश्रवसआश्रमेपितरं

एवंवदंतमिनवंशपवित्रकीर्तिःकुंभोद्भवंरघुपतिःप्रहसन्बभाषे मायाश्रितंसकलमेतदनन्यकत्वान्भक्त्या
तेनंजगतिपापहरंनिबोध ६४ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेउत्तरकांडेप्रथमः
सर्गः १ श्रीमहादेवउवाच श्रीरामवचनंश्रुत्वापरमानंदनिर्भरः मुनिःप्रोवाचसदसिसर्वेषांत
च्छृण्वताम् १ अथविश्रेश्वरोदेवस्तत्रकालेनकेनचित् प्रययौपुष्पकारूढःपितरंद्रष्टुमंजसा २ दृ
ष्ट्वातंकेकसीतत्रभ्राजमानंमहौजसा राक्षसीपुत्रसामीप्यंगत्वारावणमब्रवीत् ३ पुत्रपश्यधनाध्यक्षं
ज्वलंतंस्वेनतेजसा त्वमप्येवंयथाभूयास्तथायत्नंकुरुप्रभो ४ तच्छ्रुत्वारावणोरोषात्मनिज्ञामकरोद्दुत
म् धनदेनसमोवाऽपित्र्यधिकोवाचिरेणतु ५ भविष्याम्यंबमापश्यसंतापंत्यजस्रुव्रते इत्युक्त्वादुष्करं
कर्तुंतपःसदशकंधरः ६ आगमत्फलसिद्ध्यर्थंगोकर्णंतुसहानुजः स्वंस्वंनियममास्थायभ्रातरस्तेतपोमहत् ७

४ अचिरेणेतिच्छेदः ५ मांपश्य शिवेनचक्षुषेतिशेषः दुष्करंतपःकर्तुमित्यन्वयः ६ फल-
विश्रवसम् २ सामीप्यंगत्वाप्राप्य ३
स्य वांछितस्यसिद्ध्यर्थंसहानुजः कुंभकर्णबिभीषणसहितः स्वंस्वंनियमंस्वस्ववासनोद्भूतराजसतामससात्विकरूपम् ७

२५ २६ असौनमुनिः किंतुमुनिवेषधरः २७ २८ महताविलंबेनकिंकृतं अतिविलंबः किंकृतइत्यर्थः २९ ३० ३१ महामायि
कोरामः मायिनांदैत्यानाम् ३२ ३३ ३४ ३५ गृहीत्वातासांतेजोभिर्ज्वलंत्यर्थंस्वयंगृहीत्वासुषेणस्यवैद्यत्वात्तेनचिकित्सां



त्वत्प्रसादादहंशापाद्विमुक्तास्मिकपीश्वर शप्ताहंमुनिनापूर्वमप्सराकारणांतरे २५ आश्रमेयस्तुतेदृष्टःका
लनेमिर्महासुरः रावणप्रहितोमार्गेविघ्नंकर्तुंतवानघ २६ मुनिवेषधरोनासौमुनिर्विप्रविहिंसकः जहि
दुष्टंगच्छशीघ्रंद्रोणाचलमनुत्तमम् २७ गच्छाम्यहंब्रह्मलोकंत्वत्स्पर्शाद्धुतकल्मषा इत्युक्त्वासाययौ-
स्वर्गंहनूमानप्ययाश्रमम् २८ आगतंतंसमालोक्यकालनेमिरभाषत किंविलंबेनमहतातववानरस
त्तम २९ गृहाणमत्तोमंत्रांस्त्वंदेहिमेगुरुदक्षिणाम् इत्युक्तोहनुमान्मुष्टिंदृढंबध्वाहराक्षसम् ३० गृहा
णदक्षिणामेतामित्युक्त्वानिजघानतम् विसृज्यमुनिवेषंसः कालनेमिर्महासुरः ३१ युयुधेवायुपुत्रेण-
नानामायाविधानतः महामायिकृद्रत्तोसौहनूमान्मायिनारिपुः ३२ जघानमुष्टिनाशीर्षेभिग्नमूर्धाम
मारसः ततःक्षीरनिधिंगत्वादृष्ट्वाद्रोणंमहागिरिम् ३३ अदृष्ट्वाचौषधीस्तत्रगिरिमुत्पाट्यसत्वरः गृही-
त्वावायुवेगेनगत्वारामस्यसन्निधिम् ३४ उवाचहनुमान्राममानीतोयंमहागिरिः यद्युक्तंकुरुदेवेशावि
लंबोनात्रयुज्यते ३५ श्रुत्वाहनूमतोवाक्यंरामःसंतुष्टमानसः गृहीत्वाचौषधीःशीघ्रंसुषेणेनमहामतिः ३६



कारयामास एतेनवैद्यकशास्त्राभिनिविष्टत्वेनप्रसिद्धस्यैवचिकित्साधिकारइतिसूचितम् ३६ ७ ७ ७ ७

दुष्करमन्यैरितिशेषः ८ ९ १० दशमंशिरश्छेत्तुकामस्यप्रजापतिः प्रासः समीपमितिशेषः ११ १२ वृतममरत्वमेवभगवदिच्छा वशात्त्वयमेववृणोति सुपर्णेत्यादि १३ तथास्त्वित्यस्यावददितिशेषः १४ अक्षयाणि सुपर्णादिकृतक्षपरहितानि १५ बिभीष-



आस्थितादुष्करंघोरं सर्वलोकैकतापनम् दशवर्षसहस्राणिकुंभकर्णोऽकरोत्तपः ८ बिभीषणोऽपिध र्मात्मासत्यधर्मपरायणः पंचवर्षसहस्राणिपादेनैकेनतस्थिवान् ९ दिव्यवर्षसहस्रंतुनिराहारोदशा ननः पूर्णेवर्षसहस्रेतुशीर्षमग्नौजुहावसः १० एवंवर्षसहस्राणिनवतस्यातिचक्रमुः अथवर्षसहस्रे तुदशमेदशमाशिरः छेत्तुकामस्यधर्मात्माप्रासश्चाथप्रजापतिः ११ वत्सवत्सदशग्रीवप्रीतोऽस्मीत्यभ्य भाषत वरंवरयदास्यामियत्तेमनसिकांक्षितम् दशग्रीवोऽपितच्छ्रुत्वाप्रहृष्टेनांतरात्मना १२ अमरत्वंह णोमीशवरदोयदिमेभवान् सुपर्णनागयक्षाणांदेवतानांतथासुरैः अवध्यत्वंतुमेदेहितृणभूताहिमानु षाः १३ तथास्त्वितिप्रजाध्यक्षःपुनराहदशाननम् अग्नौहुतानिशीर्षाणियानितेसुरपुंगव १४ भवि- ष्यंतियथापूर्वमक्षयाणिचसत्तम १५ एवमुक्त्वाततोरामदशग्रीवंप्रजापतिः बिभीषणमुवाचेदंप्रणतं भक्तवत्सलः बिभीषणत्वयावत्सकृतंधर्मार्थमुत्तमम् १६ तपस्ततोवरंवत्सवृणीष्वाभिमतंहितम् वि भीषणोऽपितंनत्वाप्रांजलिर्वाक्यमब्रवीत् १७ देवमेसर्वदाबुद्धिर्धर्मेतिष्ठतुशाश्वती मारोच्चयस्त धर्ममेबुद्धिःसर्वत्रसर्वदा १८

णस्यधर्मविषयबुद्धिप्रासिकामनयात्तपः कर्तृत्वादरेणवत्सेतिद्विःसंबोधनम् १६ ४
१७ नदेवाह देवमेइत्यादिना १८ ५ ५ ५ ५ ५ ५

तथैवच भविष्यसि धर्मबुद्धिरेव भविष्यसि १९ २० वाण्यादेव प्रार्थितया २१ २२ आस्यादिति च्छेदः अहोविधिर्दुर्लंघ्य इतिशेषः
२३ वरलब्धान् प्राप्तवरान् पौत्रान् पुत्रीपुत्रान् विदादित्वादन्नू प्रायात् रावणादिसमीपमितिशेषः २४ मेवांछितमनोरथस्ते
दिष्ट्यासंवृत्तः २५ अतोयद्भयादिति तद्विष्णुकृतंभयंनोऽस्माकंगतम् सर्वविध्यत्वस्य त्वयाप्राप्तत्वात् २६ इयंलंकापूर्वम

ततःप्रजापतिःप्रीतोविभीषणमथाब्रवीत् वत्सत्वंधर्मशीलोऽसितथैवच भविष्यसि १९ अयाचितोऽपिते
दास्येत्यमरत्वंविभीषण कुंभकर्णमथोवाच वरंवरयसुव्रत २० वाण्याव्याप्तोऽथतंप्राह कुंभकर्णःपिता
महम् स्वप्स्यामिदेवषण्मासान्दिनमेकंतुभोजनम् २१ एवमस्त्वितितंप्राहब्रह्माहस्त्वादिवौकसः स
रस्वतीचतद्वक्त्रान्निर्गताप्रययौदिवम् २२ कुंभकर्णस्तुदुष्टात्माचिंतयामासदुःखितः अनभिप्रेतमेवा
स्यात् किंनिर्गतमहोविधिः २३ सुमालीवरलब्धांस्तान्ज्ञात्वापौत्रान्निशाचरान् पातालान्निर्भयःप्रा
यात्प्रहस्तादिभिरन्वितः २४ दशग्रीवंपरिष्वज्यवचनंचेदमब्रवीत् दिष्ट्यातेपुत्रसंवृत्तोवांछितोमेम
नोरथः २५ यद्भयाच्चवयंलंकांत्यक्त्वायातारसातलम् तद्गतंनोमहाबाहोमहद्विष्णुकृतंभयम् २६ अस्माभिःपू
र्वमुषितालंकेयंधनदेनते भ्रात्राक्रांतामिदानींत्वंप्रत्यानेतुमिहार्हसि २७ साम्नावाथबलेनापिराज्ञांबंधुःकु
तःसुहृत् इत्युक्तोरावणःप्राहनार्हस्येवंप्रभाषितुम् २८ वित्तेशोगुरुरस्माकमेवंश्रुत्वातमब्रवीत् प्रहस्तःप्रश्रि
तंवाक्यंरावणंदशकंधरम् २९

स्माभिरुषिता अनेनास्मत्संबंधादियंतवधनप्राप्तेति ध्वनितम् इदानींते भ्रात्राधनदेनाक्रांतांत्वंप्रत्या
नेतुंस्वाधीनांकर्तुमर्हसि २७ ननुज्येष्ठभ्रातरिकथंबलंयोग्यं तत्राह राज्ञांबंधुःकुतःसुहृत्कुतः सर्वथैताउपमर्द्यैवराज्यंप्रहर्तॄणीति भावः २८ ए
वंश्रुत्वारावणवाक्यंश्रुत्वेत्यर्थः २९

बुध्वामोहंत्यक्त्वा ३७ ३८ ममभ्रातरमहंनिरामयंगतपीडंपश्यामीत्यन्वयः ३९ बिभीषणमतेनैव तस्यलंकाछिद्रज्ञ
त्वात् ४० युद्धायाभिमुखाःयुद्धंकर्तुंरिपुणाभिमुखाइत्यर्थः ४१ मातंगोगजः ४२ राघवेणाऽभिभूतोऽगमत् गृहमितिशेषः

चिकित्सांकारयामासलक्ष्मणायमहात्मने ततःक्रुद्धोऽग्निरिवबुध्वाप्रोवाचलक्ष्मणः ३७ तिष्ठतिष्ठ
क्वगतासिहन्मीदानींदशानन इतिब्रुवन्तमालोक्यमूर्ध्न्यवघ्रायराघवः ३८ मारुतिंप्राहवत्साद्यत्वत्प्र
सादान्महाकपे निरामयंप्रपश्यामिलक्ष्मणंभ्रातरंमम ३९ इत्युक्त्वावानरैःसार्द्धंसुग्रीवेणसमन्वितः
बिभीषणमतेनैवयुद्धायसमवस्थितः ४० पाषाणैःपादपैश्चैवपर्वताग्रैश्चवानराः युद्धायाभिमुखाभूत्वा-
ययुःसर्वेयुयुत्सवः ४१ रावणोविव्यथेरामबाणैर्विद्धोमहासुरः मातंगइवसिंहेनगरुडेनेवपन्नगः ४२
अभिभूतोगमद्राजाराघवेणमहात्मना सिंहासनेसमाविश्यराक्षसानिदमब्रवीत् ४३ मानुषेणैवमे
मृत्युमाहपूर्वंपितामहः मानुषोहिनमांहंतुशक्तोऽस्तिभुविकश्चन ४४ ततोनारायणःसाक्षात्मानुषो-
भून्नसंशयः रामोदाशरथिर्भूत्वामांहंतुंसमुपस्थितः ४५ अनरण्येनयत्पूर्वंशप्तोहंराक्षसेश्वरः उत्प
त्स्यतेचमद्वंशेपरमात्मासनातनः ४६ तेनत्वंपुत्रपौत्रैश्चबांधवैश्चसमन्वितः हनिष्यसेनसंदेहइ-
त्युक्त्वामांदिवंगतः ४७

समाविश्येतिउपविश्येत्यर्थः ४३ मृत्युमेतद्देहप्राणवियोगं ४४ समुपस्थितः लंकामागतइत्य
र्थः ४५ ४६ हनिष्यसेइत्यंतःशापःनसंदेहइतितस्यैवास्थिरीकरणंसचानरण्योमामित्युक्त्वादिवंगतइत्यन्वयः ४७ छ छ

सोऽस्माकंभ्रात्रादिभिःप्रीतिः ३० देवैरनुष्ठितंलंकाहरणरूपंवैरमिदानींतनमेवनकिंतुप्राचीनमेव एवंचतेरस्मद्दूषकत्वणवदस्माकमपितद्दू
षकरणंनदोषायेतिभावः ३१ दुरात्मनःप्रहस्तस्येत्यन्वयः ३२ धनदनामकंईश्वरंनिष्काश्य ३३ धनदः तद्दूतगमनोत्तरंपितृस-
मीपंगत्वा रावणएवमाहात्रकिमुचितमितिपृष्टवान् तेनत्वयागएवोचितोऽस्यावध्यत्वादित्युक्तेतांत्यक्त्वैवेतिनिगाथापौराणि-

शूराणांनहिसोऽस्माकंशृणुमेवदतःप्रभो कश्यपस्यसुतांदेवाराक्षसाश्चमहाबलाः ३० परस्परमयुध्यंतत्य
क्त्वासौहृदमायुधैः नैवेदानींतनंराजन् वैरंदेवैरनुष्ठितम् ३१ प्रहस्तस्यवचःश्रुत्वादशग्रीवोदुरात्मनः त
थेतिक्रोधताम्राक्षस्त्रिकूटाचलमन्वगात् ३२ दूतंप्रहस्तंसंप्रेष्यनिष्काश्यधनदेश्वरम् लंकामाक्रम्यसचि
वैराक्षसैःसुखमास्थितः ३३ धनदःपितृवाक्येनत्यक्त्वालंकांमहायशाः गत्वाकैलासशिखरंतपसातोष
यच्छिवम् ३४ तेनसख्यमनुप्राप्यतेनैवपरिपालितः अलकांनगरींतत्रनिर्ममेविश्वकर्मणा ३५ दिक्पालत्वं
चकारात्रशिवेनपरिपालितः रावणोराक्षसैःसार्द्धमभिषिक्तःसहानुजैः ३६ राज्यंचकारासुराणांत्रि-
लोकींबाधयन्खलः भगिनींकालखंजायददौविकटरूपिणीम् विद्युज्जिह्वायनाम्नासौमहामायीनिशा
चरः ३७ ततोमयोविश्वकर्माराक्षसानांदितेःसुतः सुतांमंदोदरींनाम्नाददौलोकैकसुंदरीम् रावणायपुनः
शक्तिममोघांप्रीतमानसः ३८

की ३४ निर्ममेकारितवान् ३५ रावणोऽनुजैःसार्द्धंराक्षसैरभिषिक्तःलंकाराज्यइतिशेषः ३६ असु
राणांतदवताररूपरक्षसाम् यद्वा क्रूरकर्मत्वाद्रक्षःस्वप्यसुरपदप्रयोगः एवमसुरेष्वपिराक्षसपदप्रयोगइतिबोध्यम् कालखंजायतद्वं
शजायनाम्नाविद्युज्जिह्वायभगिनींशूर्पणखाम् ३७ राक्षसानांविश्वकर्मादितेःसुतोमयःमंदोदरींकन्यांरावणायददौपुनःशक्तिंचामो
घांस्वनिर्मितांददौ ३८

स्वयंदत्तामितिनसित्रेतिशेषः ३९ ४० ४१ मेघनादेतिनाम्नोऽन्वर्थत्वमाह जातमात्रइति ४२ ४३ ४४ देवादीन्समहोरगान्
निजघ्ने देवस्त्रियश्चेतिजघ्ने हृतवानित्यर्थः देवस्त्रियइतिपाठांतरम् ४५ अक्रमंदेवादिषु अन्यायाचरणम् ४६ उत्तमपुष्प

वैरोचनस्यदौहित्रींवृत्रज्वालेतिविश्रुताम् स्वयंदत्तामुदवहत्कुंभकर्णायरावणः ३९ गंधर्वराजस्य
सुतांशैलूषस्यमहात्मनः बिभीषणायभार्यार्थंधर्मज्ञांसमुदावहत् ४० सरमांनामसुभगांसर्वल
क्षणसंयुताम् ततोमंदोदरीपुत्रंमेघनादमजीजनत् ४१ जातमात्रस्तुयोनादंमेघवत्प्रमुमोचह त
नःसर्वेऽब्रुवन्मेघनादोऽयमितिचासकृत् ४२ कुंभकर्णस्ततःप्राहनिद्रामांबाधतेप्रभो ततश्चकारया
मासगुहांदीर्घांसुविस्तराम् ४३ तत्रसुष्वापमूढात्माकुंभकर्णोविघूर्णितः निद्रितेकुंभकर्णेतुरावणो
लोकरावणः ४४ ब्राह्मणानृषिमुख्यांश्चदेवदानवकिंनरान् देवस्त्रियोमनुष्यांश्चनिजघ्नेसमहोर-
गान् ४५ धनदोपिनतःश्रुत्वारावणस्याक्रमंप्रभुः अधर्मंमाकुरुष्वेतिदूतवाक्यैर्न्यवारयत् ४६ ततःकु
द्धोदशग्रीवोजगामधनदालयम् विनिर्जित्यधनाध्यक्षंजहारोत्तमपुष्पकम् ४७ ततोयमंचवरुणंनि
र्जित्यसमरेऽसुरः स्वर्गलोकमगात्तूर्णंदेवराजजिघांसया ४८ ततोऽभवन्महद्युद्धमिंद्रेणसहदैवतैः
ततोरावणमभ्येत्यबबंधत्रिदशेश्वरः ४९

कंवाहनेषूत्तमंपुष्पकाख्यंवाहनमित्यर्थः ४७ स्वर्गलोकंमेरूर्ध्वस्थितंशक्र
लोकम् अनेनयमादिलोकाः तदधःस्थिताइतिध्वनितम् ४८ देवतैः सहितेनेंद्रेणास्ययुद्धमभवदित्यर्थः ४९ ७

मदर्थे मद्वधार्थे इत्यर्थः समां हनिष्यति हनिष्यत्येवेति स्वनिश्चयाभिलाषः इदं ज्ञानं रजस्तमोजन्यत्वान्नोत्तमायफलायेति बो
ध्यं मूढात्मा अत्यंततमःप्रकृतिः निद्राप्रियत्वात् ४८ महासत्वं महाबलम् ४९ निन्युः प्रापयामासुः ५० ५१ मृत्युकाले उपस्थि
ते इदानीं मे किं कर्तव्यं तद्वदेति शेषः ५२ सबलः ससैन्यः मूलं सेनाम् ५३ वानरा नाशनीया इति चेत्तत्राह वानराणां युद्धे क्षयं ना



सएवरामःसंजातोमदर्थेमांहनिष्यति कुंभकर्णस्तुमूढात्मासदानिद्रावशंगतः ४८ तंविबोध्यमहासत्व
मानयंतुममांतिकम् इत्युक्तास्तेमहाकायास्तूर्णंगत्वातुयत्नतः ४९ विबोध्यकुंभश्रवणंनिन्यूरावणस
न्निधिम् नमस्कृत्यसराजानमासनोपरिसंस्थितः ५० तमाहरावणोराजाभ्रातरंदीनयागिरा कुंभ
कर्णनिबोधत्वंमहत्कष्टमुपस्थितम् ५१ रामेणनिहताःशूराःपुत्राःपौत्राश्चबांधवाः किंकर्तव्यमिदानीं
मेमृत्युकालउपस्थिते ५२ एषदाशरथीरामःसुग्रीवसहितोबली ससुद्रंसबलस्तीर्त्वामूलंनःपरिकृंत
ति ५३ येराक्षसामुख्यतमास्तेहतावानरैर्युधि वानराणांक्षयंयुद्धेनपश्यामिकदाचन ५४ नाशय-
त्वमहाबाहोयदर्थंपरिबोधितः भ्रातुरर्थेमहासत्वकुरुकर्मसुदुष्करम् ५५ श्रुत्वातद्रावणेंद्रस्यवच-
नंपरिदेवितम् कुंभकर्णोजहासोच्चैर्वचनंचेदमब्रवीत् ५६ पुरामंत्रविचारेतेगदितंयन्मयानृप तद
द्यत्वामुपगतंफलंपापस्यकर्मणः ५७

शंनपश्यामि अनंतत्वात् हनूमतोषध्यानयनेनजीवनाच्च ५४ अत
स्त्वद्वानराणांबलं हनूमत्सहितंनाशयस्व ५५ रावणेंद्रस्यसर्वश्रेष्ठस्यरावणस्येत्यर्थः यद्वालोकरावणानांश्रेष्ठस्यपरिदेवितम्
परिदेवनरूपंवचनम् ५६ यत्तापस्यकर्मणःफलंभावित्वेननेमयागदितंतदद्योपगतंप्राप्तम् ५७ ५ ६ ६

५० प्रथमतइंद्रग्रहणं ततस्तस्य बंधनं ततो बद्धस्य स्वपुरे आनयनं ५१ इंद्रमोचनं प्रतिदानत्वेन तदभीष्टानेकवरदानम् ५२ ५३ शा
पमाह वानरैरिति कोपिना कोपवता कैलासचालनादयं कोपः वानरमुखं नंदीश्वरं दृष्ट्वा रावणेन हसितमित्यतो वा शापः ५४ अग



तच्छ्रुत्वा सहसागत्य मेघनादः प्रतापवान् कृत्वा घोरं महद्युद्धं जित्वा त्रिदशपुंगवान् ५० इंद्रं गृ
हीत्वा लब्धासौ मेघनादो महाबलः मोचयित्वा तु पितरं गृहीत्वेंद्रं ययौ पुरम् ५१ ब्रह्मा तु मोचयामा
स देवेंद्रं मेघनादतः दत्वा वरान्बहूंस्तस्मै ब्रह्मा स्वभवनं ययौ ५२ रावणो विजयी लोकान्सर्वान्जि
त्वाक्रमेण तु कैलासं तोलयामास बाहुभिः परिघोपमैः ५३ तत्र नंदीश्वरेणैवं शप्तो यं रावणेश्वरः वा
नरैर्मानुषैश्चैव नाशं गच्छेति कोपिना ५४ शप्तोऽप्यगणयन्वाक्यं ययौ हैहयपत्तनम् तेन बद्धो दशग्रीवः
पुलस्त्येन विमोचितः ५५ ततोऽपि वलमासाद्य जिघांसुर्हरिपुंगवम् धृतस्तेनैव कक्षेण वालिना दशकं
धरः ५६ भ्रामयित्वा तु चतुरः समुद्रान्रावणं हरिः विसर्जयामास ततस्तेन सख्यं चकार सः ५७ राव
णः परमप्रीत एवं लोकान्महाबलः चकार स्ववशे राम बुभुजे स्वयमेव तान् ५८ एवंप्रभावो राजेंद्र
दशग्रीवः सहेंद्रजित् त्वया विनिहतः संख्ये रावणो लोकरावणः ५९ मेघनादश्च निहतो लक्ष्मणेन म
हात्मना कुंभकर्णश्च निहतस्त्वया पर्वतसन्निभः ६०

णयन्किमस्य शापेन भवितेति तच्छापगणनामकुर्वन् हैहयपत्तनं सहस्रार्जुननगरम् ५५ बलं हैहयप्रतिरूपं बलं हरि
पुंगवं वालिनं तद्धननोद्यमेन गतस्य विपरीतं तत एवाग्नि ष्टलाभ इत्याह तेनैव कक्षेण धृतः इति विषममत्रालंकारः ५६ स
रावणः ५७ ५८ ५९ अत्र रावणबंधकेंद्रबंधकतया रामपृष्टइंद्रजित्उत्कर्षउक्तः ६० ५ ५

एतत्तवानाश्चर्यमित्याह भवानिति आदिकृत् उत्पत्तिकर्ता जगतो भगवत्स्वरूपत्वमेवाह ६१ त्वन्नाभीति अग्निस्तेइति मुखादग्निरजायतेतिश्रुतेर्वागग्निमप्येतीति श्रुतेश्च ६२ बाहुभ्यामित्याद्यपिश्रुतिसिद्धमिति तद्विदांस्पष्टमेव ६३ प्राणः प्राणवायुः जंघाजानूरुजघनादितिसमाहारद्वंद्वः ६४ वालखिल्याऋषिविशेषाः ६५ ६६ विश्वरूपः विराडित्यर्थः मायागुणानांसत्वादीनांसत्वाव्य

भवान्नारायणः साक्षाज्जगतामादिकृद्विभुः त्वत्स्वरूपमिदंसर्वंजगत्स्थावरजंगमम् ६१ त्वन्नाभिकमलोत्पन्नो ब्रह्मालोकपितामहः अग्निस्तेमुखतोजातो वाचासहरघूत्तम ६२ बाहुभ्यांलोकपालोघाश्चक्षुर्भ्यांचंद्रभास्करौ दिशश्चविदिशश्चैव कर्णाभ्यांतेसमुत्थिताः ६३ घ्राणात्प्राणः समुत्पन्नश्चाश्विनौदेवसत्तमौ जंघाजानूरुजघनाद्भुवर्लोकादयोऽभवन् ६४ कुक्षिदेशात्समुत्पन्नाश्चत्वारः सागराहरे: स्तनाभ्यामिंद्रवरुणौवालखिल्याश्चरेतसः ६५ मेढ्राद्यमोगुदान्मृत्युर्मन्योरुद्रस्त्रिलोचनः अस्थिभ्यःपर्वताजाताः केशेभ्योमेघसंहतिः ६६ ओषध्यस्तवरोमभ्योनखेभ्यश्चखरादयः त्वंविश्वरूपःपुरुषोमायाशक्तिसमन्वितः ६७ नानारूपइवाभासिगुणव्यतिकरेसति त्वामाश्रित्यैवविबुधाः पिबंत्यमृतमध्वरे ६८ त्वयासृष्टमिदंसर्वंविश्वंस्थावरजंगमम् त्वामाश्रित्यैवजीवंतिसर्वेस्थावरजंगमाः ६९ त्वद्युक्तमखिलंवस्तुव्यवहारेपिराघव क्षीरमध्यगतंसर्पिर्यथाव्याप्याखिलंपयः ७०

तिकरेसति आधिक्यन्यूनताभ्यांपरस्परसंश्लेषेसति नानारूपोब्रह्मविष्णुरुद्रादिरूपोभासि ६७ अग्निरूपंत्वामाश्रित्यैव अमृतंहविरध्वरे देवाः पिबंति ६८ त्वमेवसृष्टिस्थितिकर्तेत्याह त्वयेति ६९ व्यवहारे तत्कालेपि अखिलंवस्तुत्वद्युक्तमेवेत्याह सत्वेनभानत्वेनचसर्वव्यवहारः सत्ताभानेचसर्वत्रत्वदीयेएवेतिभावः तदेवदृष्टांतेनोपपादयति सर्पिर्यथाखिलंपयोव्याप्यतिष्ठति तथात्वमखिलंव्याप्यतिष्ठसीतिसर्वत्रसदितिभासतेइतिचव्यवहारः तमेवभांतमनुभातिसर्वं तस्यभासासर्वमिदंविभातीतिश्रुतेः ७०

रामोनारायणइतिपूर्वमेवप्रोक्तः कथितः तवेतिशेषः एवमनेकप्रकारैः रामस्यनारायणत्वंनबुध्यसे तस्यैतत्फलमागतमि-
तिशेषः ५८ ननुत्वयेदंकथंज्ञाततत्राह एकदेति सानोपर्वतशिखरेविशालायांशिलायामितिशेषःविशालायांनगर्यामि-
त्यन्ये ५९ कुतोगंतासिकुतआगतोसीत्यर्थेआर्षदेवानांमंत्रणेदेवानांविचारस्थानेइत्यर्थः तत्रस्थितोहंततआगतइतिप्राहे

पूर्वमेवमयाप्रोक्तोरामोनारायणःपरः सीताचयोगमायेतिबोधितोपिनबुध्यसे ५८ एकदाहंवनेसा-
नौविशालायांस्थितोनिशि दृष्टोमयामुनिःसाक्षान्नारदोदिव्यदर्शनः ५९ तमप्रुवंमहाभागकुतोग-
तासिमेवद इत्युक्तोनारदःप्राहदेवानांमंत्रणेस्थितः ६० तत्रोत्पन्नमुदंतंतेवक्ष्यामिशृणुतत्वतः युवा-
भ्यांपीडितादेवाःसर्वेविष्णुमुपागताः ६१ ऊचुस्तंदेवदेवेशस्तुत्वाभक्त्यासमाहिताः जहिरावणम-
क्षोभ्यंदेवत्रैलोक्यकंटकम् ६२ मानुषेणमृतिस्तस्यकल्पिताब्रह्मणापुरा अतस्त्वमानुषोभूत्वाजहि
रावणकंटकम् ६३ तथेत्याहमहाविष्णुःसत्यसंकल्पईश्वरः जातोरघुकुलेदेवोरामइत्यभिविश्रुतः
६४ सहनिष्यतिवःसर्वानित्युक्त्वाप्रययौमुनिः अतोजानीहिरामंत्वंपरंब्रह्मसनातनम् ६५ त्यज-
वैरंभजस्वाद्यमायामानुषविग्रहम् भजतोभक्तिभावेनप्रसीदतिरघूत्तमः ६६

त्यन्वयः ६० युवाभ्यांरावणकुंभकर्णाभ्याम् ६१ अक्षोभ्यंकेनाप्यप्रापणीयक्षोभंजहीत्यत्रहेतुगर्भविशेषणंत्रैलो-
क्यकंटकमिति ६२ रावणकंटकंरावणरूपकंटकम् ६३ विष्णोरीश्वरत्वसूचकंसत्यसंकल्पत्वम् ६४ ६५ मायया
मानुष्यशरीरंनत्वसौवस्तुतोमानुषः कश्चिज्जीवइत्यर्थः भजतइतिद्वितीयाबहुवचनम् ६६ ७ ७ ७

नदेवाह त्वद्भासेति ईदृशस्त्वंनसर्ववेद्यइत्याह सर्वगमिति ७१ ज्ञानचक्षुषोप्यात्मन्येवत्वांपश्यंतीत्याह योगिनइति नतुस्वस्माद्भेदेनेत्यर्थः
एतेनसर्वत्रचैतन्यभूतस्त्वमेवेतिसूचितम् विचिन्वंति पश्यंति ७२ तथादर्शनेकारणमाह अतदिति अतद्दृश्यंजडंतन्निरसनमुखे
नस्त्रीनपुमानित्यादिरूपैर्वेदशीर्षैरुपनिषद्भागैः पश्यंति वस्तुतोनिर्धर्मकत्वात्केनापिरूपेणवक्तुमशक्यतयानिषेधमुखेनैवश्रुत्यो

त्वद्भासाभासतेऽर्कादिनत्वंतेनावभाससे सर्वगंनित्यमेकंत्वांज्ञानचक्षुर्विलोकयेत् ७१ नाज्ञानचक्षुस्त्वां
पश्येदंधद्दृक्भास्करंयथा योगिनस्त्वांविचिन्वंतिस्वदेहेपरमेश्वरम् ७२ अतन्निरसनमुखवेदशीर्षैरह
र्निशम् त्वत्पादभक्तिलेशेनगृहीतायदियोगिनः ७३ विचिन्वंतोहिपश्यंतिचिन्मात्रंत्वांनचान्यथा मयाप्र
लपितंकिंचित्सर्वज्ञस्यतवाग्रतः क्षंतुमर्हसिदेवेशतवानुग्रहभागहम् ७४ दिग्देशकालपरिहीनमनन्य
मेकंचिन्मात्रमक्षरमजंचलनादिहीनम् सर्वज्ञमीश्वरमनंतगुणंव्युदस्तमायंभजेरघुपतिंभजतामभिन्न
म् ७५ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेउत्तरकांडेद्वितीयः सर्गः २ श्रीरामउ
वाच वालिसुग्रीवयोर्जन्मश्रोतुमिच्छामितत्वतः रवींद्रौवानराकारौजज्ञातइतिनः श्रुतम् १
अगस्त्यउवाच मेरोःस्वर्णमयस्याद्रेर्मध्यशृंगेमणिप्रभे तस्मिन्सभास्तिविस्तीर्णाब्रह्मणःशतयोजना२

ब्रह्मप्रतिपादयंतीतिभावः तदपितेषांज्ञानंत्वद्भक्तिंविनोपनिषन्मात्रेणनेत्याह त्वत्पादेति अन्यथानेतिभावः ७३ विचिन्वंतःउ
पनिषत्सुविचारयंतः अन्यथाकेनचिद्धर्मेणधर्मवंतंनपश्यंतीत्यर्थः ७४ भजतांभक्तानांअभिन्नंस्वाभिन्नत्वेनबुद्धिविषयम् ७५ इतिश्रीम॰
उत्तरकांडेद्वितीयःसर्गः२ वालीति रवींद्राविति आत्मावैपुत्रनामासीतिश्रुतेः तयोरेववानराकारत्वमुक्तम् १ सभाआस्तइतिछेदः
२

योगंध्यानम् ३ किंचित्ध्यात्वात दत्यजत् भूमाविति शेषः भूमौपतितमात्रेणातेनसलिलेन दार्ढ्यंप्राप्तमितिशेषः तस्मात्कपिर्जातः ४ द्रुहिणोब्रह्मामेसमीपेवसेत्यन्वयः ५ ब्रह्मणेति एवमुक्तइत्यन्वयः ऋक्षाधिपः सएवकपिः ६ उद्यतउद्यमवान् फलमूलार्थंतल्ला

तस्यांचतुर्मुखः साक्षात्कदाचिद्योगमास्थितः नेत्राभ्यांपतितंदिव्यमानंदसलिलंबहु ३ तद्द्रुहीत्वाकरे ब्रह्माध्यात्वाकिंचित्तदुत्यजत् भूमौपतितमात्रेणतस्माज्जातोमहाकपिः ४ तमाहद्रुहिणोवत्सकिंचि-त्कालंवसाश्रमे समीपेसर्वशोभाढ्येततःश्रेयोभविष्यति ५ इत्युक्तोन्ववसत्तत्रब्रह्मणोवानरोत्तमः एवं बहुतिथेकालेगतेऋक्षाधिपः सुधीः ६ कदाचित्पर्यटन्नद्रौफलमूलार्थमुद्यतः अपश्यद्दिव्यसलिलां वापींमणिशिलान्वितां ७ पानीयंपातुमागच्छत्तत्रछायामयंकपिम् दृष्ट्वाप्रतिकपिंमत्वानिपपातजलां-तरे ८ तत्राहत्वाहरिंशीघ्रंपुनरुत्प्लुत्यवानरः अपश्यत्सुंदरींरामामात्मानंविस्मयंगतः ९ ततःसुरेशोदेवेशं पूजयित्वाचतुर्मुखम् गच्छन्मध्याह्नसमयेदृष्ट्वानारींमनोरमाम् १० कंदर्पशरविद्धांगस्त्यक्तवान्वीर्यमुत्त-मम् तामप्राप्यैवतद्बीजंवालदेशेऽपतद्भुवि ११ वालीसमभवत्तत्रशक्रतुल्यपराक्रमः तस्यदत्वासुरेशानः स्वर्णमालांदिवंगतः १२ भानुरप्यागतस्तत्रतदानीमेवभामिनीम् दृष्ट्वाकामवशोभूत्वाग्रीवादेशेऽसृज-न्महत् १३ बीजंतस्यास्ततःसद्योमहाकायोऽभवद्धरिः तस्यदत्वाहनूमंतंसहायार्थंगतोरविः १४

भार्थमद्रौपर्यटन्

वापीमपश्यत् ७ छायामयंस्वच्छायारूपम् प्रतिकपिंस्वविरोधिकपिम् ८ आत्मानंसुंदरींरामांतद्रूपंस्त्रीरूपमपश्यत् ९ सुरेशइंद्रश्चतु-र्मुखंपूजयित्वापुरंगच्छन् मनोरमांतांनारींदृष्ट्वा १० तामप्राप्यैवतयासहमीलनंविनैववीर्यंत्यक्तवान् ११ १२ १३ तस्याग्रीवादेशेमहद्बीजम-सृजत् सृष्टवान् १४

भक्तान्प्रसीदतिइत्यस्योपपत्तयेभक्तेरुत्कर्षमाह भक्तिरिति ज्ञानजनकत्वादेवतस्यामोक्षदत्वंकिंबहुनाकर्मभक्तिहीनंकृतं असत्समंअकृततुल्यंफलाजनकमित्यर्थः ६७ सर्वावतारेष्वयंमुख्योवतारइत्याहावताराइति लीलानुकारिणस्तत्तज्जाति चेष्टानुकरणशीलस्येत्यर्थः ६८ येनिपुणारामंभजंतितेसंसारंतीर्त्वाहिरेःपदंयांति ६९ शुद्धसत्वाःशुद्धांतःकरणाःभवः

भक्तिर्जनित्रीज्ञानस्यभक्तिर्मोक्षप्रदायिनी भक्तिहीनेनयत्किंचित्कृतंसर्वमसत्समम् ६७ अवतारास्तु बहवोविष्णोर्लीलानुकारिणः तेषांसहस्रसदृशोरामोज्ञानमयःशिवः ६८ रामंभजंतिनिपुणामनसावच सानिशम् अनायासेनसंसारंतीर्त्वायांतिहरेःपदम् ६९ येराममेवसततंभुविशुद्धसत्वाध्यायंतितस्य चरितानिपठंतिसंतः मुक्तास्तएवभवभोगमहाहिपाशैःसीतापतेःपदमनंतसुखंप्रयाति ७० इति श्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेयुद्धकांडेसप्तमःसर्गः ७ श्रीमहादेवउवाच कुंभकर्णवचःश्रुत्वाभ्रुकुटीविकटाननः दशग्रीवोजगादेदमासनादुत्पतन्निव १ त्वमानीतोनमेज्ञानबोध नायसुबुद्धिमान् मयाकृतंसमीकृत्ययुद्धस्वयदिरोचते २ नोचेद्गच्छसुखंसुप्तुंस्वर्थंनिद्रात्वांबाधतेधुना रावणस्यवचःश्रुत्वाकुंभकर्णोमहाबलः ३ रुष्टोयमितिविज्ञायतूर्णंयुद्धायनिर्ययौ सलंघयित्वाप्राका रंमहापर्वतसन्निभः ४

संसारोभोगःशरीरंयस्यतादृशोयोमहानाहिःकालस्तदीयैःपाशैर्बंधने मुक्ताःसीतापतेरनंतसुखंपदंशुद्धंब्रह्मप्रयांतिप्राप्नुवंति ७० इतिश्रीमत्सकल॰अध्यात्मरामायण॰युद्धकांडेसप्त मःसर्गः ७ उत्पतन्निव क्रोधादितिशेषः १ समीकृत्यअंगीकृत्यमत्समव्यवहारोभूत्वा २ ३ ४ ५ ५

पूर्ववत्पुंरूपमित्यर्थः १५ १६ समाश्वास्यभाविनोदुर्वारत्वान्ममस्त्रीरूपताकथमित्यादिखेदोमास्त्वित्याश्वास्येत्यर्थः दैवतादूतंदेवदूत
मित्यर्थः १७ १८ सौभाग्यवलितांतद्युक्तां १९ वशेभविष्यंति अनुगाश्चभविष्यंति २० २१ २२ त्वत्तस्यकिष्किंधाराज्यादिदानमेव

पुत्रद्वयंसमादायगत्वासानिद्रिताक्वचित् प्रभातेऽपश्यदात्मानंपूर्ववद्वानराकृतिम् १५ फलमूलादिभिः
सार्द्धंपुत्राभ्यांसहितःकपिः नत्वाचतुर्मुखस्याग्रेऋक्षराजःस्थितःसुधीः १६ ततोऽब्रवीत्समाश्वास्य
बहुशःकपिकुंजरम् तत्रैकंदेवतादूतमाहूयामरसन्निभम् १७ गच्छदूतमयादिष्टोगृहीत्वावानरोत्त
मम् किष्किंधांदिव्यनगरींनिर्मितांविश्वकर्मणा १८ सर्वसौभाग्यवलितांदेवैरपिदुरासदाम् तस्यांसिं
हासनेवीरराजानमभिषेचय १९ सप्तद्वीपगतायेयेवानराःसंतिदुर्जयाः सर्वेतेऋक्षराजस्यभविष्यं
तिवशेऽनुगाः २० यदानारायणःसाक्षाद्रामोभूत्वासनातनः भूभारासुरनाशायसंभविष्यतिभूतले
२१ तदासर्वेसहायार्थेतस्यगच्छंतुवानराः इत्युक्तोब्रह्मणादूतोदेवानांसमहामतिः २२ यथाऽऽज्ञ
स्तथाचक्रेब्रह्मणातंहरीश्वरम् देवदूतस्ततोगत्वाब्रह्मणेतन्निवेदयत् २३ तदादिवानराणांसाकिष्किं
धाऽभून्नृपाश्रयः सर्वेश्वरस्त्वमेवासीरिदानींब्रह्मणार्थितः २४ भूमेर्भारोहृतःकृत्स्नस्त्वयालीलानृदेहि
ना सर्वभूतांतरस्थस्यनित्यमुक्तचिदात्मनः २५

तदादितत्प्रभृतिहेनृप वानराणांसाकिष्किंधाआश्रयोऽभूत् त्वमेवे
दानींब्रह्मणार्थितःसन्सर्वेश्वरःसर्ववानरेश्वरः २४ लीलानृदेहिना लीलागृहीतमनुष्यदेहेन अयंपराक्रमस्तवनाश्चर्यायेत्याह
सर्वभूतेति यस्त्वामेवंवेत्तिसोऽपिस्वेच्छयासृष्टिसंहारसमर्थोभवतिचेत्साक्षात्तवकिंवाच्यमितिभावः २५ ७

नन्वीदृशस्यानाश्चर्यस्य किंवर्णनेनेत्यत्राह तथापीति सर्वलोकपापनाशायात्मनस्तेषां स्वस्वाय चानाश्चर्यमपि आश्चर्यवत्कृत्वा वर्ण्यत इत्यर्थः २६ २७ तज्जन्मनस्त्वदाश्रयत्वात्तदुपकारार्थत्वात् यस्तयोर्जन्म कथ्यते स पातकैर्मुच्यते २८ यदर्थं सीताहृता तां त्वदाश्रयां त्वद्विषयां कथां वक्ष्यामि प्रजापतेः स्वतं मानसं सुतम् २९ ३० अस्मिन्लोके प्रवरः श्रेष्ठः विवक्षितं श्रेष्ठ्यमेवाह देवानामित्यादि ब

अखंडानंदरूपस्य कियानेष पराक्रमः तथापि वर्ण्यते सद्भिर्लीलामानुषरूपिणः २६ यशस्ते सर्वलोकानां पापहत्यै स्वस्वाय च यइदं कीर्तयेन्मर्त्यो वालि सुग्रीवयोर्महत् २७ जन्म त्वदाश्रयत्वात्स मुच्यते सर्वपातकैः अथान्यां संप्रवक्ष्यामि कथां राम त्वदाश्रयाम् २८ सीता हृता यदर्थं सा रावणेन दुरात्मना पुरा कृतयुगे राम प्रजापति सुतं विभुम् २९ सनत्कुमारमेकांते समासीनं दशाननः विनयावनतो भूत्वा ह्यभिवाद्येदमब्रवीत् ३० कोन्वस्मिन्प्रवरो लोके देवानां बलवत्तरः देवा यं समाश्रित्य युद्धे शत्रुं जयंति हि ३१ कं यजंति द्विजा नित्यं कं ध्यायंति च योगिनः एतन्मे शंस भगवन्प्रश्नं प्रश्नविदां वर ३२ ज्ञात्वा तस्य हृदिस्थं यत्तद्दर्शनेण योगदृक् दशाननमुवाचेदं शृणु वक्ष्यामि पुत्रक ३३ भर्ता यो जगतां नित्यं यस्य जन्मादिकं न हि सुरा सुरैर्नुतो नित्यं हरिर्नारायणोऽव्ययः ३४ यन्नाभिपंकजाज्जातो ब्रह्मा विश्वसृजां पतिः सृष्टं येनैव सकलं जगत्स्थावरजंगमम् ३५ तं समाश्रित्य विबुधा जयंति समरे रिपून् योगिनो ध्यानयोगेन तमेवानुजपंति हि ३६

लवत्तरत्वमेव प्रकटयति देवाश्चेति ३१ ३२ तस्य रावणस्य हृत्स्थं नाहृशान्मे मरणं भवत्विति इच्छारूपम् ३३ यः सुरासुरैर्नुतः स हरिर्नारायणादिपदवाच्य इत्यर्थः ३४ अथ तल्लक्षणमाह यन्नाभीति अनेन ब्रह्मसहितजगत्कर्तृत्वरूपं तल्लक्षणमुक्तम् ३५ अनुजपंति ध्यायंति ३६

अभिनादयन् स्वनादप्रतिध्वनियुतंकुर्वन् ५ कालयामासपीडयामास ६ कालांतकमिवकालमिवांतकमिवचतं दृष्ट्वादुद्रु
वुरित्यर्थः मुद्गरेणायुतामितिशेषः ७ पाणिपादैश्चस्वीयैश्चूर्णयंतं एकवचनाभाव आर्षः एवमनेकप्रकारेणचूर्णयंतं ८ बुद्धिमा
न्सर्वास्वप्यवस्थासुज्येष्ठोमंतव्यइतिसदाचाराभिज्ञः ९ १० परिबोधनप्रकारमाह सीतामित्यादिइतिबोधितस्तन्नशृणो-

निर्ययौनगरात्तूर्णंभीषयन्हरिसैनिकान् सननादमहानादंससमुद्रमभिनादयन् ५ वानरान्कालयामा
सबाहुभ्यांभक्षयन्रुषा कुंभकर्णंतदादृष्ट्वासपक्षमिवपर्वतम् ६ दुद्रुवुर्वानराःसर्वेकालांतकमिवा-
खिलाः भ्रमंतंहरिवाहिन्यांमुद्गरेणमहाबलम् ७ कालयंतंहरीन्वेगाद्भक्षयंतंसमंततः चूर्णयंतं
मुद्गरेणपाणिपादैरनेकधा ८ कुंभकर्णंतदादृष्ट्वागदापाणिर्बिभीषणः ननामचरणौतस्यभ्रातुर्ज्येष्ठस्य
बुद्धिमान् ९ बिभीषणोहंभ्रातुर्मेदयांकुरुमहामते रावणस्तुमयाभ्रातर्बहुधापरिबोधितः १० सीतांदे
हीतिरामायरामःसाक्षाज्जनार्दनः नशृणोतिचमांहंतुंखड्गमुद्यम्यचोक्तवान् ११ धिक्त्वांगच्छेतिमा
हत्वापदापापिभिरावृतः चतुर्भिर्मंत्रिभिःसार्द्धंरामंशरणमागतः १२ तच्छ्रुत्वाकुंभकर्णोऽपिज्ञात्वा
भ्रातरमागतम् समालिंग्यचवत्सत्वंजीवरामपदाश्रयः १३ कुलसंरक्षणार्थायराक्षसानांहितायच
महाभागवतोसित्वंपुरामेनारदाच्छ्रुतम् १४

तिनश्रुतवान् विपरीतंखड्गमुद्यम्यहंतुमुद्यतइतिशेषः ततःकथंचिन्निवृत्तोमां
पदाहत्वाउक्तवांश्च ११ किमुक्तवांस्तदाहधिक्त्वांगच्छेतिततोहंचतुर्भिर्मंत्रिभिरिति १२ समालिंग्यचाहेतिशेषः तदेवाह वत्स
त्वमिति १३ ननुमेजीवनंकथंसंभाव्यतेतत्राह महाभागवतोऽसीति भगवद्भक्तस्यतेनाशःकथमपिनसंभाव्यइतिभावः १४

३७ कांवेति वाशब्दो वाक्यालंकारे ३८ ३९ हरेर्गतिं मुक्तिम् सा च क्रमेण हिरण्यगर्भेण सहेति बोध्यम् ४० एवं मुक्तीन्छुरपि रावणो भगव-
न्मायावशात्तमोगुणप्रधानत्वाच्च भगवद्द्वेषेणैव मुक्तिं प्रार्थयते योत्स्येऽहमिति कथं योत्स्य इत्यर्थः ४१ ४२ स्फुरवीभव वेत्यस्य न तद्इत्या-
दिः ततो मरणलाभेन स्फुरिवत्वम् ४३ स्थावरेषु नदेषु नदीषु च व्याप्त इति शेषः ४४ इदमुपलक्षणं तदाह ओंकार इति प्रणवरूपत्वे



महर्षेर्वचनं श्रुत्वा प्रत्युवाच दशाननः दैत्यदानवरक्षांसि विष्णुना निहतानि च ३७ कां वा गतिं प्रपद्यंते प्रेत्य ते मु
निपुंगव तमुवाच मुनिश्रेष्ठो रावणं राक्षसाधिपम् ३८ दैवतैर्निहता नित्यं गत्वा स्वर्गमनुत्तमम् भोगक्ष
ये पुनस्तस्माद्भ्रष्टा भूमौ भवंति ते ३९ पूर्वार्जितैः पुण्यपापैर्म्रियंते चोद्भवंति च विष्णुना ये हतास्ते तु प्राप्नु
वंति हरेर्गतिम् ४० श्रुत्वा मुनिमुखात्सर्वं रावणो हृष्टमानसः योत्स्येऽहं हरिणा सार्द्धमिति चिंतापरोऽभव
त् ४१ मनःस्थितं परिज्ञात्वा रावणस्य महामुनिः उवाच वत्स तेऽभीष्टं भविष्यति न संशयः ४२ कंचित्कालं
प्रतीक्षस्व स्फुरवीभव दशानन एवमुक्त्वा महाबाहो मुनिः पुनरुवाच तम् ४३ तस्य स्वरूपं वक्ष्यामि ह्यरू
पस्यापि मायिनः स्थावरेषु च सर्वेषु नदेषु च नदीषु च ४४ ओंकारश्चैव सत्यं च सावित्री पृथिवी च सः
समस्तजगदाधारः शेषरूपधरो हि सः ४५ सर्वे देवाः समुद्राश्च कालः सूर्यश्च चंद्रमाः सूर्योदयो दिवारा
त्रीयमश्चैव तथाऽनिलः ४६ अग्निरिंद्रस्तथा मृत्युः पर्जन्यो वसवस्तथा ब्रह्मरुद्रादयश्चैव ये चान्ये देवदानवाः ४७

न सर्ववाङ्मयव्याप्तिरुक्ता ओंकारो वै सर्वा वागिति श्रुतेः तदेवाह सत्यं वाक्यं सा विवीगायत्री च सइत्यनेनार्थोऽपि सर्वस्तद्रूप एवेत्याह पृ
थिवी चेति इदमुपलक्षणं तदाह समस्तेति ४५ ४६ शेषादयो दानवांताः सर्वे तद्रूपा एवेति विराड्रूपमुक्तम् ४७ ५ ७

सूर्यादौ प्रकाशोऽग्नेर्ज्वलनं रक्षासंहारौ च तदधीना एवेत्याह विद्योततीति तत्सर्वमयत्नेनैवेत्याह क्रीडां करोतीति क्रीडामिव करोती-
त्यर्थः न तु कश्चिच्छ्रमस्तस्येति भावः ४८ उक्तमेवार्थं सामान्येनोपसंहरति तेनेति अथैतद्ध्यानाशक्तं प्रति अन्यद्ध्येयं रूपमाह नीलो
त्पलेति विद्युद्वर्णाम्बरं पीताम्बरं जाम्बुनदप्रख्यां तत्सदृशकान्तिम् देवीं पश्यन् स्वदर्शनेन सृष्टिव्यापारे प्रवर्तयन् आलिंग्य तिष्ठतीति
अनेन तस्याः स्वतो नात्यन्तं भेद इति दर्शितम् शक्तिशक्तिमतोस्तादात्म्यस्यैव शास्त्रसिद्धान्तत्वात् ४९ ५० तादृशोऽपि तत्प्रसादं वि-

विद्योतति ज्वलत्येष पाति त्वात्तीति विश्वकृत् क्रीडां करोत्यव्ययात्मा सोऽयं विष्णुः सनातनः ४८ तेन सर्वमिदं
व्याप्तं त्रैलोक्यं सचराचरम् नीलोत्पलदलश्यामो विद्युद्वर्णाम्बरावृतः ४९ शुद्धजाम्बूनदप्रख्यां श्रियं
वामाङ्कसंस्थिताम् सदाऽनपायिनीं देवीं पश्यन्नालिंग्य तिष्ठति ५० द्रष्टुं न शक्यते कैश्चिद्देवदानवपन्न
गैः यस्य प्रसादं कुरुते स चैनं द्रष्टुमर्हति ५१ न च यज्ञतपोभिर्वा न दानाध्ययनादिभिः शक्यते भगवा
न्द्रष्टुमुपायैरितरैरपि ५२ तद्भक्तैस्तद्गतप्राणैस्तच्चित्तैर्धूतकल्मषैः शक्यते भगवान् विष्णुर्वेदान्तामल
दृष्टिभिः ५३ अथवा द्रष्टुमिच्छा ते शृणु त्वं परमेश्वरम् त्रेतायुगे स देवेशो भविता नृपविग्रहः ५४ हि
तार्थं देवमर्त्यानामिक्ष्वाकूणां कुले हरिः रामो दाशरथिर्भूत्वा महासत्त्वपराक्रमः ५५

नाद्रष्टुमशक्य इत्याह द्रष्टुमिति ५१ तद्दर्शने तद्भक्तिरेवासाधारण उपाय इत्याह न चेति ५२ तद्भक्तैरिति च शक्यते द्रष्टुमि
ति शेषः ५३ अथवा द्रष्टुमिच्छा एतैरुपायैर्विनापीति शेषः नृपविग्रहः गृहीतराजशरीरः ५४ हितार्थमित्यस्य त्वद्धार्थमि
ति हृत्स्थः शेषः महासत्त्वपराक्रमः महान्तौ बलपराक्रमौ यस्य सः ५५ ६ ६ ६

यतोहंमदेनमत्तनेत्रस्ततोममस्वीयपरविभागेनकिमपिनदृश्यतेऽतस्त्वंगच्छकदाचित्त्वय्यपिप्रहारसंभवात् १५ चिंतापरःकुंभ
कर्णःकथंनाशमेष्यतीतिचिंतापरः १६ यस्यगंधंसमाघ्रायान्येगजाःपलायंतेसगंधगजःसयथाक्षुद्रपशून्कालयन्चरतित



गच्छतातममेदानींदृश्यतेनचकिंचन मदीयोवापरोवापिमदमत्तविलोचनः १५ इत्युक्तोश्रुमुखोभ्रातुश्चर
णावभिवंद्यसः रामपार्श्वमुपागत्यचिंतापरउपस्थितः १६ कुंभकर्णोपिहस्ताभ्यांपादाभ्यांपेषयन्हरीन्
चचारवानरींसेनांकालयन्गंधहस्तिवत् १७ दृष्ट्वातंराघवःक्रुद्धोवायव्यंशस्त्रमाददात् चिक्षेपकुंभकर्णा
यतेनचिच्छेदरक्षसः १८ समुद्गरंदक्षहस्तंतेनघोरेणनादयन् सहस्तःपतितोभूमावनेकान्दलयन्कपीन्
१९ पर्यंतमाश्रिताःसर्वेवानराभयवेपिताः रामराक्षसयोर्युद्धंपश्यतःपर्यवस्थिताः २० कुंभकर्णश्छिन्न
हस्तःशालमुद्यम्यवेगतः समरेराघवंहंतुंदुद्रावतमथोच्छिनत् २१ शालेनसहितंवामहस्तमैंद्रेणराघवः
छिन्नबाहुमथायांतंनर्दंतंवीक्ष्यराघवः २२ द्वावर्धचंद्रौनिशितावादायास्यपदद्वयम् चिच्छेदपतितोपा
दोलंकाद्वारिमहास्वनो २३ निकृत्तपाणिपादोपिकुंभकर्णोतिभीषणः वडवामुखवद्वक्त्रंव्यादायरघुनंद
नम् २४ अभिदुद्राववन्निनदन्राहुश्चंद्रमसंयथा अपूरयच्छिताग्रैश्चसायकैस्तद्रघूत्तमः २५ शरपू
रितवक्त्रोसौचुक्रोशातिभयंकरः अथसूर्यप्रतीकाशमैंद्रंशरमनुत्तमम् २६

द्वदयंचचार १७ वायव्यंशस्त्रंवायव्यास्त्राभिमंत्रितंशस्त्रम् १८ १९ पर्यंतमाश्रितायुद्धभूमध्येस्थिताहस्तपातभयात्तत्प्रांतमाश्रि
ताइत्यर्थः २० २१ २२ २३ २४ वडवामुखंनामसमुद्रेशतयोजनविस्तीर्णवडवाग्निवासस्थानम् २५ २६ ७ ७ ७

